य· प्रत्यगभिन्नब्रह्मरूपं मा मनुष्यं मत्वा स्वात्मप्रशंसनमेवं करोतीत्यभ्यसूयति तस्मा अपि न त्वया वाच्यमिदं गीताशास्त्रम् । हिताय तपस्विने गुरुदेवभक्ताय शुश्रूषवे भगवत्यनसूयवे वाच्यमित्यर्थाल्लभ्यते । एवमेव सर्ववेदान्तशास्त्रसंप्रदायविधिरित्यर्थ ॥ ६७ ॥

यथोक्ताधिकारिणे गीताशास्त्रोपदेष्टु फलमाचष्टे--

**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

य इति । यो मद्भक्त नि श्रेयसार्थत्वात् परममिमं ग्रन्थं गोप्यतमत्वात् गुह्यं मद्भक्तेष्वभिधास्यति वक्ष्यति ग्रन्थतो ऽर्थतश्च वदतीत्यर्थ । भगवत परमेश्वरस्य शुश्रूषा मया क्रियत इति मयि परां भक्तिं कृत्वा *स मद्भक्त· तत्फलभूतं मामेवैष्यति मुच्यते संसारबन्धनात् । अस्मिन्नर्थे* संशयो न कर्तव्य इत्यर्थ ॥ ६८ ॥

एवं संप्रदायकर्तुस्तुल्यो ऽन्य प्रियो मे नास्तीत्याह—

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

न चेति । प्राणिमात्रेषु देवतिर्यङ्मनुष्येषु सर्ववेदान्तसिद्धान्तगीताशास्त्रसंप्रदायकृत तस्मान्महानुभावान्मे मम परमेश्वरस्य कश्चिदप्यन्य· *प्रियकृत्तमो न चास्ति लोके ऽस्मिन् भुवि तस्मादन्य प्रियतरो न च* भविता न भविष्यतीत्यर्थ ॥ ६९ ॥

पाठयितु फलमाह—

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**

अध्येष्यत इति । य पुमानावयो कृष्णार्जुनयोरिम धर्मादनपेत धर्म्यं सवादमध्येष्यते जपरूपेण पठिष्यति तेन पुसा उच्चैरुपाशु मानसाना यज्ञाना ज्ञानयज्ञस्य मानसत्वात वैशिष्टयमिति गीताशास्त्राध्ययनरूप ज्ञानयज्ञेनाहमिष्ट प्रसादित स्यामिति मे मम परमेश्वरस्य मति ॥ ७० ॥

अन्यस्य पठत श्रोतु श्रवणफलमाह—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सो ऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

श्रद्धावानिति । श्रद्धावान् यो नर स्वस्य पठनशक्त्यभावे ऽपि परस्य पठत शृणुयात् श्रोता श्रद्धावानपि किमुच्चै पठति किमबद्धमिति दोषदृष्टिं न कुर्यात् तद्व्यावृत्त्यर्थमनसूयु॰ असूयारहित॰ सन् शृणुयात सो ऽपि सर्वपापै मुक्त सन् अश्वमेधादिपुण्यकर्मणा शुभान् लोकान् पाप्नुयात् ॥ ७१ ॥

त्वयैकाग्रचित्तेन मदुपदिष्टार्थं किं यथावद्गृहीत येन स्वाज्ञान जमोहनिवृत्ति स्यात्, यदि ते मदुपदेशत स्वप्रबोधो नोदित तदा पुन रुपदेश करोमीत्याशयेन श्रीभगवानुवाच—

श्रीभगवानुवाच—

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

कच्चिदिति। हे पार्थ! त्वयैकाग्रेण चेतसा मयोक्तं श्रुतं कच्चिच्छ्रवणेनावधारितं किम्, किं वा प्रमादतो नावधारितम्। तव शास्त्रश्रवणायासो ममोपदेष्टृत्वायासश्च यदर्थो ऽयं प्रवृत्तः सो ऽयमज्ञानसंमोहः प्रनष्टः कच्चित् हे धनंजय! अविवेकस्वभावो नाशं गतः किमिति प्रश्नार्थः॥ ७२॥

भगवदुपदेशतः स्वात्मनः कृतार्थतां ख्यापयन्नर्जुन उवाच—

अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मया ऽच्युत।**
**स्थितो ऽस्मि गतसंदेहः करिष्ये वचनं तव॥ ७३॥**

नष्ट इति। हे अच्युत! त्वदुपदेशजनितप्रबोधमार्तण्डेन स्वाज्ञानमोहध्वान्तो नष्टः कवलितः। त्वत्प्रसादान्मया ब्रह्मैवाहमहमेव ब्रह्मेति प्रत्यगभिन्नब्रह्मस्मृतिर्लब्धा यया स्मृत्या सर्वग्रन्थीना विप्रमोक्षो भवति। स्वाज्ञानमोहनिवृत्तितो ब्रह्मात्मस्मृतिलाभश्चेत्येतावत्खलु सर्ववेदान्तसिद्धान्तज्ञानफलं यतो नातो ऽतिरिक्तमस्ति अतो ऽहं गतसंदेहः संस्त्वच्छासने स्थितो ऽस्मि। चित्तशुद्ध्यर्थं स्वधर्मानुष्ठानं कुर्विति यत्त्वयोक्तं तव तद्वचः करिष्ये। न मे कर्तृत्वमस्ति, त्वदुपदेशतो मम कृतार्थत्वादित्यर्थ.। एवं कृष्णार्जुनसंवादं धृतराष्ट्रं प्रत्युक्त्वा ऽथ कथासंबन्धप्रदर्शनार्थं संजय उवाच—

संजय उवाच—

**इत्यहं वासुदेवस्य पार्थस्य च महाऽऽत्मनः।**
**संवादमिममश्रौपमद्भुतं रोमहर्षणम्॥ ७४॥**

इतीति । इत्येवमुक्तप्रकारेणाहमत्यन्तविस्मयहेतुत्वादद्भुतं रोमाञ्चकरत्वात् रोमहर्षणं महाऽऽत्मनो वासुदेवस्य पार्थस्य च संवादमिममश्रौषं श्रुतवानस्मीत्यर्थ ॥ ७४ ॥

कस्मादेव श्रुतवाननसीत्यपेक्षायामाह—

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतमं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

व्यासेति । व्यासेन भगवता यतो मह्यं दिव्य चक्षु श्रोत्रं दत्तम्, अतो ऽहमेतद्गुह्यतम सर्ववेदान्तसारसंग्रहभूत गीताशास्त्रं श्रुतवानस्मि । किं तदिति तत्राह—परमिति । स्वाविद्याद्वयतत्कार्यात्पर प्रत्यक्परचितो योग मैक्यज्ञान श्रुतवानित्यर्थ । कस्मादिति तत्राह—कृष्णादिति साक्षात्स्वयमेव कथयत उपायोपेयभूतनिष्ठाद्वयात्मक गीताशास्त्र योगेश्वरात् कृष्णात् ब्रह्मादिस्तम्बान्तदेशिकादित्यर्थ ॥ ७५ ॥

एतदेव स्मृत्वा सदा हृष्यामीत्याह—

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

राजन्निति । हे राजन् धृतराष्ट्र! सकृच्छ्रवणमात्रत सर्वपापहरत्वात पुण्य केशवार्जुनयो अद्भुतमिम सवाद संस्मृत्य सस्मृत्य मुहुर्मुहु हृष्यामि ॥

भगवद्रूपस्मरणतो ऽपि हृष्यामीत्याह—

**तच संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥**

तच्चेति। हे राजन्! हरेरत्यद्भुत तच्च विश्वरूप सम्मृत्य सस्मृत्य मे महान् विस्मय प्रादुर्भूत। तेनैवाह पुन पुन हृष्यामि ॥ ७७ ॥

एवभूते भगवति प्रसन्ने सति पाण्डवाना पराजयशङ्का कुत इत्याह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥ इति।**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन सवादे सन्यासयोगो नामाष्टादशो ऽध्याय ॥

यत्रेति। यत्र यस्मिन् पाण्डवपक्षे योगाना योगिना चेश्वर श्रीकृष्णो भगवान् वर्तते, यत्र च पार्थो गाण्डीवधनुर्धरो जागर्ति तत्रैव ध्रुवा राज्यश्री ध्रुवो विजय ध्रुवा विभूति ध्रुवा नीति न्यायो ऽपीति मे मति निश्चय। इतिशब्द शास्त्रपरिसमाप्त्यर्थ ॥ ७८ ॥

येन वेदान्तसिद्धान्तसार सम्यक्प्रकाशित।
यान्ति यज्ज्ञानतो मुक्तिं तस्मिन्शाम्यतु मे मन ॥
येन पार्थाय गीताऽन्त्यपद्यतस्तत्त्वमर्थयो।
लक्ष्यैक्य भणित मे ऽद्य वैजन्य स प्रयच्छतु ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रशिष्यश्रीरामचन्द्रेन्द्र कृतौ श्रीमद्भगवद्गीताऽर्थप्रकाशिकायामष्टादशो ऽध्याय ॥

नैष्कर्म्योपनिषद्ब्रह्मनाम्निना पत्महसिका।
गीताऽर्थबोधिनी सेट्ट श्रियानारायणार्पिता ॥

ओं श्रीमद्विश्वाधिष्ठानपरमहससद्गुरुरामचन्द्राय नम ॥

# BRAHMAVIDYĀ

## THE ADYAR LIBRARY BULLETIN

Editor : Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.)

Jt. Editor : A. N. Krishna Aiyangar, M.A., L.T.

*Rates of Subscription :*

Life Subscription Rs. 100

or $ 50

or £ 10

| | (Per Annum) | Single copy |
|---|---|---|
| India & Ceylon | Rs. 6 | Rs. 2-8 |
| U. S. A. | $ 3 | $ 1.25 |
| British Empire | Sh. 12 | Sh. 5 |
| Other Countries | Rs. 9 | Rs. 3-8 |

*All Communications to be addressed to :*

THE DIRECTOR,

Adyar Library,

Adyar, Madras, S. India.